

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका

जूलै २०२० रू.५/-

तिरुमल क्षेत्रे
श्री स्वामिनः
आणिवर आस्थानम्
१६-०७-२०२०

चक्रत्ताल्वार जयंतिः
२१-०७-२०२०




प्रतिभट श्रेणिभीषण वरगुणस्तोमभूषण
जनिभयस्थानतारण जगदवस्थानकारण।
निखिलदुष्कर्मकर्शन निगमसद्धर्मदर्शन
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन।।

(श्रीवेदांतदेशिक विरचित श्री सुदर्शनाष्टकम्-१)

## गीतामृतम्



तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान्।।
(भगवद्गीता १२/१)

तदा पितामहः भीष्मः सिंहः इव उच्चैः गर्जनम् अकरोत्। ततः शङ्खमपि उच्चैः अधमत् येन दुर्योधनस्य महान् सन्तोषः जातः।

## जगन्नाथाष्टकम्

हर त्वं संसारं द्रुततरमसारं सुरपते!
हर त्वं पापानां विततिमपरां यादवपतेः!
अहो! दीने नाथे निहितमचलं निश्चितपदं
जगन्नाथः स्वामी नयनपथगामी भवतु मे।।
(श्री जगद्गुरुशङ्कराचार्यकृत जगन्नाथाष्टकस्य देव व्रती टीका)



हे! देवाधिदेव! अहं जन्ममरणरूपे संसारे पतितोऽस्मि। तादृशं मां रक्षितुं साररहितं संसारं दूरीकुरु। तदर्थम् अपारपापानां समुदायमपि हर। त्वञ्च यादवानां पति यादवान् यथा रक्षितवान् तथा मामपि त्रायस्व। तव रक्षणाय अहमेव योग्यः। मम अन्यः नाथः नास्ति। त्वमेव शणम् असि। तव पादसेवया मामनुगृहाण। तदर्थं त्वं मम साक्षात्कारविषयो भव।

# नौमिश्री श्रावर्णीं रमाम्

समस्त जननीं वन्दे चैतन्यस्तन्य दायिनीम्।
श्रेयसीं श्रीनिवासस्य करुणामिव रूपिणीम्।।

चैत्रादि द्वादश मासेषु अयं श्रावणमासः अन्यतमः।वर्षर्तौ जलबिन्दुभिः श्रावणलक्ष्म्याः शोभा सर्वदिक्षु परिव्याप्ता भवति। विशेषतया वरलक्ष्म्याः व्रताचरणं सर्वाः सुवासिन्यः भक्ति श्रद्धाभिः कुर्वन्ति। महालक्ष्म्याः अनुग्रहप्राप्तये स्वर्णिम मासः अयम्! महालक्ष्म्याः अनुग्रहेणैव किल समस्त सम्पदः अनुभूयन्ते, तदर्थमस्माकम्पूर्वजैः पुराणेषु विद्यमान महालक्ष्म्याः पूजां सारल्येन प्रदर्शिताः। वेदे श्रीसूक्तेऽपि लक्ष्म्याः विशेषाः वर्णिताः। सर्वैश्वर्याणां सर्वशुभकार्याणाम् आधारः श्रावणमासः।

इयं लक्ष्मी भगवतः दशवतारेष्वपि अनपायिनीव दृश्यते, तदर्थं विष्णु पुराणे

राघवत्वे भवेत्सीता रुक्मिणी कृष्ण जन्मनी।
अन्येषु चावतारेषु विष्णो ह्येषानपायिनी''

इत्ययं श्लोकः लोके नितान्त प्रसिद्धः। चन्द्रसहोदरीत्यपि वदन्ति। यथा चन्द्रस्य शोभा लोके परिव्याप्त तथैव लक्ष्म्याः शोभाऽपि संदृश्यते। वनाधिपतिः बिल्ववृक्षः देव्याः तपः प्रभावेणाविर्भूतः। तस्य फलानि अज्ञानान्तरायान् नुदन्ति। क्षुत्पिपासाभ्यां ये तिष्ठन्ति तेषां बाधां निवारयति तदर्थं सुगन्धद्वारां, नित्यपुष्टां समस्त सम्पन्नां, सर्वजीवनां नायिकां, अस्माकं मनसोद्भूत उदात्त आकाङ्क्षा वाक्सत्यं, आहार समृद्धया आनन्देत्यादयः फल प्रदायिनी लक्ष्म्याः विशेष आराधनमस्मिन्मासे क्रियते चेदनन्तफलानि प्राप्तुं शक्नुमः।

''श्रियं देवीमुपह्वये श्रीर्मादेवीर्जुषताम्''

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः

तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०७ सञ्चिका-०४

# जूलै-२०२०

श्रीशार्वरि नाम संवत्सरस्य आषाढ शुक्ल एकादशी तः श्रावण शुक्ल द्वादशि पर्यन्तम् - १९४१



मुखचित्रम् - तिरुमलक्षेत्रे श्रीस्वामिनः आणिवर अस्थानम् (तिरुमल)
अन्तिमरक्षापुटः - तिरुमलक्षेत्रे श्रीस्वामिनः पवित्रोत्सवः (तिरुमल)



**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते संपर्कं कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# तिरुमलक्षेत्रे आणिवर-आस्थानम्

- डा.नन्दनभट्टः
चरवाणी - ८५००५६३०७४

परमात्मनः सृष्टौ कालः अत्यन्तं विशिष्टः। कालं सर्वेषामपि आधारं मन्यन्ते तत्त्ववेत्तारः। कालं परमात्मनः स्वरूपं मत्वा आराधयन्ति ऋषयः। अयम् अनुभवैकवेद्यः अखण्डश्च। परमात्मा कालातीतः। अवशिष्टः सर्वोऽपि प्रपञ्चः तदधीनः। काले काले परमात्मा भक्तैः आराधनीयः। भगवदाराधनमेव भक्तानां प्रधानकर्तव्यम्। अखण्डमपि कालं व्यवहारार्थं बहुधा विभज्य कालज्ञाः अस्मभ्यं कार्याकार्योपदेशं कृतवन्तः। सूर्यं परितः भूमेः एकवारं प्रदक्षिणकालः संवत्सरः। संवत्सरार्धम् अयनम्। अयनं दक्षिणायनम् उत्तरायणमिति द्विधा। नित्यम् आराधनीयः परमात्मा पर्वदिवसेषु विशेषतः आराधनीयः। अस्मिन् क्रमे अयनारम्भेषु अपि आराधनीयः। उत्तरायणस्य प्रारम्भकालः मकरसङ्क्रमणत्वेन सर्वत्र महता वैभवेन आचर्यते। दक्षिणायनस्य आरम्भकालः कर्काटकसङ्क्रमणमिति कथ्यते। सर्वलोकैकनाथस्य श्रीवेङ्कटेश्वरस्य सन्निधौ तिरुमलक्षेत्रे कर्काटकसङ्क्रमणं विशेषपर्वदिवसत्वेन समाचरन्ति। अयम् उत्सवः आणिवर आस्थानम् इति नाम्ना कथ्यते।

### आणिवरशब्दार्थः

तमिळसंप्रदाये आडिनामकः मासः कर्काटकमासस्य समानमासः। कर्काटकसङ्क्रमणकालिकपूजा आडिपूजा। इयं विशेषपूजा - आणिवल् - आणिवर् इति भाषायां विपरिणम्य ''आणिवर आस्थानम्'' इति नाम्ना इदानीं कथ्यते।

### ऐतिहसिकसम्बन्धः

ईस्ट्इन्डिया कम्पनिजनानां परिपालनकाले मद्रासुराज्यस्य उत्तर-आर्काटु-जनपदाधिकारिणः अधीने तिरुमलक्षेत्रम् आसीत्। तदा इङ्ग्लेण्ड्सर्वकारेणभारतीयानां ''धार्मिकसंस्थानां व्यवहारेषु हस्तक्षेपः न करणीयः'' इति निर्णयः कृतः। तदा ईस्ट् इण्डियाकम्पनीजनाः तिरुमलक्षेत्रस्य निर्वहणभारं तिरुमलक्षेत्रे विद्यमानस्य महन्तुमठस्य ज्येष्ठेभ्यः समर्पितवन्तः। तदा सेवादासमहाशयः मठस्य प्रमुखः आसीत्। एवं १८४३ तमे वत्सरे जूलै षोडशदिनाङ्के सेवादासमहाशयः तिरुमलक्षेत्रस्य ''विचारणकर्ता'' इति पदे नियुक्तः अभवत्। तस्मिन् दिवसे ईस्ट्इन्डियाकम्पनीपक्षतः तिरुमलक्षेत्रस्य सर्वविधानि आधिकारिकपत्राणि, वस्तूनि, धनसम्पदः, भूसम्पदः सर्वमपि सेवादासमहाशयाय हस्तान्तरितमभवत्। काकतालीयन्यायेन वा भगवतः सङ्कल्पबलात् वा सः दिवसः दक्षिणायनस्य आरम्भकालः आसीत्। तस्य दिवसस्य स्मरणार्थं प्रतिवत्सरं कर्काटकसङ्क्रमणपर्वणि देवस्थानस्य कार्यनिर्वहणाधिकारिणे आयव्ययादीनां गणनां श्रावयित्वा परिपालनस्य सर्वविधान् अधिकारान् हस्तगतं कुर्वन्ति। सः



स्वामिनः विश्वासपूर्णः सेवकः भूत्वा सर्वान् व्यवहारान् निर्वहेत् इति आशास्यते।

**उत्सवस्य आचरणम् -**

उत्सवस्य दिवसे प्रातः नित्यार्चनं समाप्य श्रीदेवीभूदेवीसहिताय मलयप्पस्वामिने (उत्सवमूर्तये), भगवतः सैन्याध्यक्षाय विष्वक्सेनाय च अभिषेकं निर्वर्तयन्ति। ततः पश्चात् विग्रहान् सर्वाभरणैरलङ्कृत्य घण्टामण्डपे सुवर्णमण्डपं संस्थाप्य तस्मिन् उपावेशयन्ति। एतं सुवर्णमण्डपं सर्वभूपालवाहनम् इत्यपि कथयन्ति। अयं मण्डपः पूर्वाभिमुखः, गरुडविग्रहस्य पुरतश्च स्थाप्यते। अस्मिन् श्रीदेवीभूदेवीसहितः मलयप्पस्वामी सार्वभौमप्रभया विराजते। मण्डपस्य पार्श्वे सर्वसैन्याधिपः श्रीविष्वक्सेनः क्षात्रतेजसा दक्षिणाभिमुखः सन् उपस्थितो भवति। अर्चकाः उपस्थितेभ्यः देवेभ्यः विविधभक्ष्यान् निवेदयन्ति।

तिरुमलक्षेत्रस्य ज्येष्ठजीयर् स्वामिपादाः कनिष्ठजीयर् स्वामिभिः स्वशिष्यबृन्दैः, देवालयस्य अधिकारिगणेन च सहिताः षट् कौषेयवस्त्राणि रजतपात्रेण शिरसि वहन्तः ध्वजस्तम्भं प्रदक्षिणीकृत्य आलयं प्रविष्य मूलविराट्समीपे निवेदयन्ति। अर्चकवरेण्याः षट्सुवस्त्रेषु चत्वारिवस्त्राणि मूलमूर्तये समर्पयन्ति। मूलविग्रहस्य अलङ्करणात् परम् अवशिष्टं वस्त्रद्वयं जीयङ्गार्वर्याः घण्टामण्डपम् आनीय उत्सवविग्रहस्य विष्वक्सेनस्य च अलङ्कारार्थं प्रयच्छन्ति। अर्चकाः यथोचितं भगवन्तं सेनापतिञ्च अलङ्कृत्य मङ्गलाक्षतान् समर्पयति। अस्मिन् सन्दर्भे देवदेवस्य पक्षतः अर्चकाः सदक्षिणतण्डुलदानं प्राप्य ''नित्यैश्वर्यो भव'' इत्यादिभिः मङ्गलवचनैः मङ्गलाशासनं कुर्वन्ति। तिलचूर्णं नैवेद्यरूपेण समर्प्य मङ्गलनीराजनं निवेदयन्ति।

**उत्सवाचरणम् -** उत्सवदिवसे प्रातः काले श्रीदेवी भूदेवी सहिताय मलयप्पस्वामिने अभिषेकं निर्वहन्ति। ततः पश्चात् जीयर् महाभागेभ्यः आलयस्य मुद्रां, कुञ्चिकागुच्छं दास्यन्ति। ततः पश्चात् भगवतः पादतले संस्थापितं कुञ्चिकाकुच्छं, देवालयमुद्रां च देवस्थानस्य कार्यनिर्वहणाधिकारिणे ददति। अस्मिन् सन्दर्भे तत्र उपस्थिताः भगवते उपायनानि समर्पयन्ति। तानि कार्यनिर्वहणाधिकारिणाम् अनुमोदनपूर्वकं भगवतः दानपात्रे समर्प्यन्ते।

एतस्य पर्वदिनस्य अङ्गतया अपराह्णे रथवीथिकायां पुष्पान्दोलिकायां भगवतः यात्रा वैभवेन प्रचलति। अस्मिन् पर्वणि भगवद्दर्शनं कृत्वा भक्ताः सर्वेऽपि कृतार्थाः भवेयुः।



# श्रीवेङ्कटेश्वरस्य
# पवित्रोत्सवः

- आचार्य वेदान्तं श्रीविष्णुभट्टाचार्युलु
चरवाणी - ९८४९२६४६०७



निखिलहेयप्रत्यनीककल्याणगुणाकरः स्वाश्रित वात्सल्यैकजलधिः वैखानसप्रशंस्यमानपञ्चविध व्यूहात्मकः परव्यूहविभवान्तर्याम्यर्चावतारधारी श्रीमन्नारायणः। अस्य श्रीमन्नारायणस्य अर्चारूप एव वेङ्कटाद्रौ विराजमानायाः स्वामिपुष्करिण्याः नैर्ऋत्यां राराजमानायां आनन्दनिलयदिव्यविमानच्छायायां अचिन्त्यदिव्याद्भुतनित्ययौवन स्वभाव लावण्यातिशयेन विराजमानो मूर्तिविशेषः।

हित्वौपनिषदं रूपं प्रमाणानामगोचरम्।
सर्वेषां हर्षदं भक्त्या दृष्टमात्रेण मुक्तिदम्।
सर्वकल्याणसम्पूर्णं गुणराशिसमाश्रयम्।।

इत्युक्तरीत्या अर्चावतारे विराजमानस्य श्रीश्रीनिवासस्य वात्सल्य-स्वामित्व-सौशील्य-सौलभ्य-सार्वज्ञ्य-सर्वशक्तित्व सत्यसङ्कल्पत्व-परमकारुणिकत्व-कृतज्ञत्व-परिपूर्णत्व-परमोदारत्वादयः गुणाः अनुसन्धेयाः। अत्र वेङ्कटाचलः तावत् सर्वपापक्षयरूपः।

कलिदोषपरीतानां नराणां पापचक्षुषाम्।
वेङ्कटेशात् परो देवो नत्स्यन्यश्शरणं भुवि।।

बहूनां जन्मसिद्धानां सुकृतरहितजनविषये तथाविधप्रायश्चित्त विधानरूपः वेङ्कटगिरिः।

नराणां पापचक्षुषां नात्स्यन्यश्शरणं भुवि।
भूम्यां वेङ्कटाद्रौ अर्चारूपेण वर्तमानं मां विना
सर्वपापनिवृत्तये उपायान्तराभावात् तथाविधं मामेकं
प्रपद्यस्व इति भगवता उपदिष्टमभूत्।

सकललोकशरण्यः परमात्मा श्रीनिवास एव सर्वेषां भक्तानां आस्तिकानां परमागति रूप एव। प्रकृतमनुसरामः

सर्वैः ज्ञायते यदखिलाण्डकोटिब्रह्माण्डनायकस्य वेङ्कटाद्रिक्षेत्रौ विराजमानस्य सकललोकशरण्यस्य अर्चामूर्तेः श्रीनिवासस्य आराधनं तावत् वैदिकेन मार्गेण नित्यकल्याणं हरिद्रातोरणं वत् नित्य-वार-मास-पक्ष-संवत्सरेषु निर्दिष्टे दिने निर्दिष्टेकाले वैभवेन श्रुतिमन्त्र-सङ्गीत-वाद्य-तन्त्रादिभिः शुद्धैः द्रव्यैश्च अनुष्ठीयते इति।

तत्र श्रावणमासे शुक्लपक्षे एकादशी-द्वादशी-त्रयोदशी तिथिषु त्र्याह्निरीत्या प्रचलितस्य पवित्रोत्सवस्य स्वरूपं क्रियाविधानं च यथाशास्त्रं परिशीलयामः

नित्ये नैमित्तिके वापि तथा संवत्सरार्चने
ज्ञानतोऽज्ञानतो वापि ये दोषास्सम्भवन्ति वै।
पवित्रारोपणेनैव ते शाम्यन्ति न संशयः।।



सर्वदोषोपशमनं सर्वकामसमृद्धिदम्।
आयुरारोग्यदं कर्तुः सर्वाध्वरफलावहम्।।
पवित्रारोपणं विष्णोः कारयेत् सर्वशान्तये।

क्रियाधिकारः ३१,२१-२४

नित्यनैमित्तिकसंवत्सरार्चने ज्ञाताज्ञातदोषाः ये सम्भवन्ति ते पवित्रारोपणेन शाम्यन्ति। इदं सर्वदोषोपशमनं सर्वसमृद्धिदं आयुरारोग्यप्रदं सर्वयज्ञफलप्रदं सर्वशान्तिकरं च भवेत्।

क्षौमतन्तुभिः विनिर्मितानि पवित्राणि सुसंस्कृत्य संप्रोक्ष्य अभिमृश्य प्रतिष्ठापनं कृत्वा प्रार्थनां कृत्वा भगवतः परिषद्बिम्बानां च मालारूपेण सन्धारणं करणीयम्।

आचार्य ऋत्विक्वरणेन मृत्सङ्ग्रहणपूर्वक अङ्कुरार्पणेन च इदं पवित्रोत्सवं आरम्भणीयं भवेत्।

प्रथमदिने प्रातः यागशालायां आचार्य अर्चकपाचक परिचारक यजमानानां दोषनिवारणाय पापप्रध्वंसाय कर्मार्हतासंपादनाय च अकल्मषहोमः रक्षाबन्धनं पञ्चगव्यप्राशनं उत्सवबिम्बानां स्नपनं चैते अंशाः सम्यगाचरन्ति विद्वांसः।

रात्रौ तथ्य- आहवनीय-अन्वाहार्य-गार्हपत्य-आवसथ्य-पौण्डरीकाग्निकुण्डेषु अग्निप्रतिष्ठापनं प्रधान कुम्भाराधनं वैष्णव-विष्णुसूक्त-पुरुषसूक्त-श्री भू-नीलासूक्त- सर्वदैवत्य-यद्देवादि-पारमात्मिक-ईकारादिमन्त्रैः होमः पवित्राणां अधिवासः इत्येते सम्यगनुष्ठीयन्ते विद्वद्भिः।

द्वितीयदिने प्रातः कुम्भाराधनं होमः स्नपनं सुमुहूर्ते सर्वत्र आलये विद्यमानानां विग्रहाणां विमान-ध्वजस्तम्भ बलिपीठादीनां परिवाराणां च पवित्रसमर्पणं नीराजनं इत्येते उद्दिष्टाः क्रियाः सन्ति।

रात्रौ होमः कुम्भाराधनं प्रधानतमौ अंशौ। तृतीयदिने प्रातः कुम्भाराधनं होमः स्नपनं एते समाचरन्ति विद्वांसः। रात्रौ कुम्भाराधनं होमः कर्मसाद्गुण्यद्वारा पूर्णफल संसाधनार्थं पूर्णाहुतिः कुम्भात् बिम्बेषु आवाहनं प्रोक्षणं भक्तानां क्षेमस्थैर्य धैर्यादि प्रदानपूर्वकप्रार्थना आचार्य अर्चकादीनां सम्मानं चेति क्रियाः अनुष्ठीयन्ते।

### उपसंहारः

य एवं कृतेन पवित्रारोपणेन देवशं यजेदब्दं तदेव संपूर्णं भवति। सर्वान् कामान् अवाप्नोति विष्णुलोकं सगच्छतीत्याह मरीचिः।

विमानार्चनाकल्पः
७४

अखिलाण्डकोटिब्रह्माण्डनायकस्य आदिमध्यान्तरहितस्य श्रीवेङ्कटेश्वरस्य पवित्रोत्सवः क्रिस्तोः पश्चात् १४६४ वर्षे वैभवेन समारब्ध इति कटारि सालुव मल्लय्यदेव महाराज शासनाधारेण वयं ज्ञातुं प्रभवामः। तदनन्तरं कालवैपरीत्यवशात् मध्ये नानुष्ठितः। पुनः १९६२ वत्सरे अयमुत्सवः समारब्ध इति चारित्रकांशः।

भगवान् परमात्मा श्रियःपतिः अनेन पवित्रोत्सवेन सन्तुष्टान्तरङ्गोभूत्वा दोषापनोदनद्वारा सम्पूर्णार्चनाफलं संप्राप्य भक्तान् अस्मान् सर्वान् अनुगृह्णातु इति संप्रार्थ्य विरमामि।

।।श्रीनिवासं भजेऽनिशम्।।



# विजयस्य प्रथमं सोपानं शारीरकतपः

तेलुगु मूलम् - डा॥ वैष्णवांघ्रि सेवकदासः
संस्कृतानुवादः डा. एम्. प्रफुल्ला
चरवाणी - ९४४०२८५९८५




अस्मिन् जगति यत्किञ्चिदपि साधयितुं मानवस्य तपोबलमवश्यम्। असुराः अपि एतत् जगत् शासितुं तीव्रं तपः कृत्वा बलसंपन्नाः बभूवुः इति पुराणेषु कथितम्। वस्तुतः यदा एतत् जगत् सृष्टः तदा प्रप्रथमे श्रुतः शब्दः'तप'। नारायणनाभिकमलात् संभूतः ब्रह्मा कर्तव्यतामूढः बभूव। तदा 'तप' इति शब्दं द्विवारं श्रुतम्। तत् श्रुत्वा ब्रह्मा तपसि मग्नः अभवत्। अनन्तरं अद्भुतं विश्वमिदं सृष्टम्। परन्तु मानवानां दानवाः इव अतिघोरं तपश्चरणमनावश्यकम्। केवलं त्रिविधं तपः कुर्वन् मानवः तपोबलं लब्ध्वा विजयं साधयितुं शक्तः भवति इति भगवद्गीतायां श्रीकृष्णेनोक्तम्। श्रद्धान्विताः, विशेषतः युवानः, एतत् विषयं गणयित्वा गीताचार्येणोक्तं त्रिविधं तपः नाम किमिति विद्युः। विजयपथे प्रथमपदविक्षेपणं शारीरकतपसा सिध्यति। भगवद्गीतायां

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते।

इत्युक्तम्। सर्वे मानवाः प्रतिनित्यं एतत् तपः कुर्वन्तु। युवानः तत् कदाचित् कुर्वन्ति। कदापि देवं नमन्ति। पितरौ प्रणमन्ति। विशेषतः परीक्षासमयेषु, जन्मदिनेषु, परीक्षासु उत्तमश्रेण्यां उत्तीर्णतावाप्तिसमये ईदृशः व्यवहारः दृश्यते। किन्तु देवद्विजब्राह्मणान्, पितरौ च प्रतिनित्यं पूजनीयाः। एषः शारीरकतपस्य एकः अंशः। यः पितरौ प्रणमति निसर्गतः एव ताभ्यां मुखात् वा हृदयात् आशीर्वादं प्राप्नोति। गुरुजनान् नित्यं अवश्यं प्रणमन्तु जनाः। कश्चन मासपर्यन्तं गुरुजनपूजनं करोति, सः एव गीतावाक्यस्य महिमानं जानाति। देवालये ब्राह्मणं नमस्करोति चेत् सः ब्राह्मणः आशीर्वादमेव ददाति।

शुचित्वं, सारल्यमपि शारीरकं तपः एव। शुचित्वं नाम ब्राह्याभ्यन्तरशुचिः। प्रतिदिनं द्विवारं स्नानं बाह्यशुचिं सूचयति। तथैव दिने पञ्चदशनिमेषपर्यन्तं भगवद्ध्यानं आभ्यन्तरशुचिं सूचयति। नम्रता सारल्यतां लक्षयति। ब्रह्मचर्यमपि शारीकं तपः। आधुनिके काले नैकान् व्रतान् आचरन्ति जनाः। अस्मिन् समये ब्रह्मचर्यं अनुतिष्ठन्ति। गीतासूत्रमिदं अवश्यं अनुसृत्य युवानः निर्मलमनस्काः भवेयुः। एवमेव अहिंसा अपि आचरणीया। मांसभक्षणत्यागः एव अहिंसाचरणम्। शाकाहारेण मनोनैर्मल्यं सिध्यति। शरीरं नीरुजं भवति। अतः शाकाहारमपि शारीरकं तपः।

एवं शारीरकतपश्चरणेन जनः अवश्यं तपोबलसंपन्नः भूत्वा वाञ्छितार्थान् साधयति। ज्ञातुमिच्छन्ति चेत् यूयं सर्वे केवलं मासपर्यन्तं शारीरकतपं आचरन्तु। गीतावाक्यस्य महिमा ज्ञायते। विजयोस्तु।


वंदे पद्मकरां प्रसन्नवदनां सौभाग्यदां भाग्यदां
हस्ताभ्या मभयप्रदां मणिगणैर्नानाविदैर्भूषिताम्
भक्ता भीष्ट फलप्रदां हरिहर ब्रह्मादिभिस्सेवितां
पार्श्वे पंकज शंङ्क पद्मनिधिभिर्युक्तां सदा शक्तिभिः
सरसिजनयने सरोजहस्ते
धवळतरांशुकगंधमाल्यशोभे
भगवति हरिवल्लभे मनोज्ञे
त्रिभुवन भूतिकरि प्रसीदमह्यम्।

# लाक्डौन् विरामानन्तरम्
# तिरुमलक्षेत्रे आरब्धा
# श्री स्वामिनः दर्शन दृश्यमालिका

















तिरुमल श्री स्वामिनः आलयं यथा शास्त्रं आणिवार आस्थानं प्राचलत्।
श्री श्री श्री पेद्द जीयर् स्वामी श्री श्री श्री चिन्न जीयर् स्वामी, ति.ति.दे. धर्मकर्तॄणां
मण्डलेः अध्यक्षः श्री वै.वि.सुब्बारेड्डि दम्पत्यौ, कार्यनिर्वहणाधिकारी श्री अनीलकुमार्
सिंघाल्, अडिषनल् कार्यनिर्वहणाधिकारी श्री धर्मारेड्डि दम्पत्यौ, उन्नताधिकारिणश्च भागं गृहीताः







करोणा वैरस् विनश्य सकलजगत् आयुरारोग्यएश्वर्यैः वर्धतां
इति पार्थयन् ति.ति.देवस्थानेन निर्वाहितः राहुग्रह चूडामणि सूर्यग्रहण जपयज्ञः



# वरलक्ष्मी व्रतम्

- एन्.उमादेवी
चरवाणि - ९९५१७३४४९४

स्त्रीणां सर्वसंपत्प्रदं सकलसौभाग्यदायकं सत्सन्तानजनकं वरलक्ष्मीव्रतं कैलासशिखरे परमेश्वरः पार्वतीमुद्दिश्य प्रोक्तवानिति स्कान्द, भविष्योत्तरपुराणयोः वर्तते।

प्रतिसंवत्सरं श्रावणमासशुक्लपक्षपूर्णिमायाः पूर्वं आगते भृगुवासरे वरलक्ष्मीव्रतं प्रचलति। एतद्व्रतं स्कान्दभविष्योत्तरपुराणयोः अभिवर्णितं आसीत्। तत्र वरलक्ष्मीदेव्याः महिमाविशेषाः सम्यक् प्रोक्ताः। अस्य व्रतस्य आचरणेन कथाश्रवणेन च जनेषु भक्तिभावः उत्पद्यते। पूर्वं वरलक्ष्मीदेव्याः अनुग्रहात् चारुमती अन्याः स्त्रियश्च दीर्घसौमङ्गल्यं सकलैश्वर्यं सत् सन्तानं च प्राप्नुवन्।

ईश्वरः एवमुवाच - हे पार्वति! व्रतानां उत्तम व्रतं एकमस्ति तद्व्रतं स्त्रीणां सर्वसौभाग्यकारणं सर्वसम्पत्प्रदम्। अचिरं पुत्रपौत्रप्रदायकम्। एतत् व्रतं वरलक्ष्मीव्रतमिति कथ्यते। एतद्व्रतं श्रावणमास-शुक्लपक्ष-पूर्णिमायाः पूर्वं आगते भृगुवासेर आचरणीयम्। ''हे पार्वति! अस्य व्रतस्य आचरणे न स्त्रीणां कीदृशं पुण्यफलं भविष्यति इति वक्ष्यामि। सावधानेन श्रुणु'' इति पार्वतीमुद्दिश्य शङ्करः अवोचत्।

स्वर्ण रत्नमणिमय मण्डपैः, प्राकारैः गृहैश्च शोभितं मगधदेशे कुण्डिनं नाम नगरं आसीत्। तत्र चारुमती नाम्नी ब्राह्मणस्त्री अभूत्। सा पतिभक्तिपरायणा श्वश्रू श्वशुरयोः शुश्रूषां कुर्वन्ती गृहकार्यनिर्वहणे कुशला विदुषी सततं मञ्जुभाषिणी स्नेहशीला अभवत्। तस्याः एकस्मिन् दिने स्वप्ने वरलक्ष्मीः साक्षात्कृत्य ''हे चारुमति! अत्रागच्छ! तव शुभं भूयात्। वरलक्ष्मीदेवता प्रसन्नमनस्का अत्रागता, श्रावणमास-शुक्लपक्ष-पूर्णिमायाः पूर्वं आगते भृगुवासरे मां पूजय, तवाभीष्टसिद्धिरस्तु'' इति कथ्यमानायां सत्यां चारुमती स्वप्न एव वरलक्ष्मीदेवतां सन्तोषेण नमस्कृत्य ''नमस्ते सर्वलोकानां जनन्यै पुण्यमूर्तये। शरण्ये त्रिजगद्वंद्ये विष्णुवक्षःस्थलालये। ''तव कृपादृष्टिः यस्मिन् प्रसरति स मानवः पुण्यात्मा, स एव सद्गुणसम्पन्नः, स एव प्रशंसनीयः स एव पत्नीपुत्रयुक्तः, स एव शूरः, स एव पण्डितः, हे हरिप्रिये! जन्मान्तरेषु विहित पुण्यकर्मफलेन मह्यं तव पादारविन्ददर्शनभाग्यं लब्धम्'', इति वरलक्ष्मी देवतां बहु प्रकारं स्तोत्रमकरोत्। सा चारुमत्या विहितैः स्तोत्रैः उपचारैश्च सन्तुष्टा तस्याः बहून् वरान् दत्वा अन्तर्धानमभूत्।

चारुमती स्वप्नानन्तरं निद्रां परित्यज्य प्रभातसमये स्वस्याः स्वप्न वृत्तान्तं श्वश्रू श्वशुरयोः



बन्धुभ्यः अकथयत्। बान्धवाः चारुमती स्वप्नविषयं प्रशंसिताः वयं सर्वाः एवमेव कुर्मः इति निश्चित्य श्रावणमासं कदा आगमिष्यति इति निरीक्षिताः आसन्। तासां भाग्यवशात् वरलक्ष्मीव्रतदिनं सम्प्राप्तम्। तस्मिन् दिने स्त्रियः प्रातःकाले स्नानादिकं कृत्वा (विचित्र) वस्त्राणि धृत्वा गृहस्य ईशान्यप्रदेशे मण्डपं स्थापयित्वा तत्र आसने तण्डुलधान्यं निक्षिप्य तत्र पूर्णकुम्भे वरलक्ष्मीदेवतायाः आवाहनं कृत्वा चारुमती स्वसखीभिः सह भक्तिश्रद्धाभ्यां पूजामकरोत्।

**पद्मासने पद्मकरे सर्वलोकैक पूजिते।**
**नारायणप्रिये देवि सुप्रीता भव सर्वदा॥**

इति श्लोकेन वरलक्ष्मीदेवतायाः आवाहनं कृत्वा कल्पोक्तप्रकारेण ध्यान-आवाहनादि षोडशोपचारपूजां कृत्वा दक्षिणहस्ते नवग्रन्थियुक्तं तोरं धृत्वा भक्ष्य, भोज्य, चोष्य, लेह्य पानीयादि सकलविधपदार्थान् निवेदनं कृत्वा श्रोत्रियाय ब्राह्मणाय द्वादशभिः भक्ष्यैः दक्षिणताम्बूलादिभिः वायनं दत्वा देव्याः सन्निधौ निवेदितपदार्थैः भोजनं अकुर्वन्। अनन्तरं वरलक्ष्मीदेव्याः अनुग्रहात् चारुमती एवमाद्याः स्त्रियः नवरत्नमणिमयमाणिक्यादि हारान् लेभिरे। अन्यानि स्वर्णाभरणानि च प्राप्नुवत्। एवं प्रकारेण महदैश्वर्यं पुत्रपौत्रादीन् धनधान्यसमृद्धिं च लब्ध्वा सर्वदा अन्नदाने बान्धवानां पोषणे आदरेण च अत्यन्त श्रद्धायुक्ताः चतुरङ्गबलैः समेताः तासां गृहेषु सुखेन न्यवसन्।

हे पार्वति! चारुमत्या आचरितं एतद् व्रतं दृष्ट्वा तत्र स्त्रियः परस्परं व्रतषियं चारुमत्याः स्वप्नवृत्तान्तं कथयामासुः। एतत् सत्यं अस्य व्रतस्य आचरणेन मानवः अभीष्टसिद्धिं प्राप्नोति। चारुमतीदेव्याः कारणात् वरलक्ष्मीप्रसादात् अस्माकं अभीष्टानि पूरितानि। अहो चारुमतीं! कियती पुण्यवती भाग्यवती महिमान्विता वरलक्ष्मीदेव्याः अनुग्रहपात्रा इति चारुमती स्त्रियः प्रशंसतिवत्यः। तदारभ्य एतद् व्रतं उत्तमं लोके प्रसिद्धं चाभूत्। इदं व्रतं ब्राह्मण, क्षत्रिय, वैश्यशूद्राः सर्वेऽपि कर्तुं शक्नुवन्ति। एतद् व्रतं ये शृण्वन्ति श्रावयन्ति वा तेषां वरलक्ष्मीदेव्याः अनुग्रहात् सकलकार्याणि सिध्यन्ति इति परमेश्वरः पार्वतीं प्रति अवोचत्।

### व्रतवैशिष्ट्यं आचरणफलं च -

चारुमतीदेवीं दृष्टान्तत्वेन स्वीकृत्य इदानींतन कालिकैः जनैरपि विशेषतः स्त्रीभिः वरलक्ष्मीदेवता न केवलं व्रतदिने परन्तु सर्वकालं पुराणोक्तप्रकारेण पूजनीया भवति भक्तिश्रद्धाभ्यां तस्याः आराधनेन सर्वेषां जनानां इष्टकाम्यार्थसिद्धिः भवति भविष्यति च।

# अन्नमाचार्यजीवनचरित्रम्




तेलुगु मूलम् - डा.मन्नूरु शिवप्रवीण्,
संस्कृतानुवादः- एम्.नागमाधुरी कामेश्वरी,
चरवाणी - ९४४०८४८८५८

### पद्मावत्याः कटाक्षः

अन्यैः भक्तैः अनवगतां तस्य क्षुधां माता अलमेलुमङ्गा अवगत्यान्नमाचार्य समीपमागत्य एवमकथयत्।

हे पुत्र! बहु अलसः जातः इति भाति इति मातुः आश्वसनेन अन्नमाचार्यः परवशं गतः। श्रीवेङ्कटेश्वर दर्शनप्राप्तेः मार्गः उपदिशतु मात! इति अलमेलुमङ्गां प्रार्थितवान्।

हे पुत्र! परमपावनेऽस्मिन् भवान् पादरक्षां स्वीकृत्य आगतवान्। एकवारं तान् त्यक्त्वा पश्यतु भवतः सर्वतः विद्यमानं परब्रह्मतत्त्वं दृग्गोचरो भवति इति माता अकथयत्। मातुः वाक्यं शृत्वा अन्नमाचार्यः पादरक्षे त्यक्त्वा तस्य परितः अपश्यत्। तावत्पर्यन्तं वृक्षाः वल्मीकाः इव दृग्गोचरे पतितः सः तिरुमला पर्वतः ततः परं स्वर्णमयं, विष्णुमयं भाति। तदा मात्रे अन्नमाचार्यः अभिवन्दनं कृतवान्। तदा माता अलमेलुमङ्गा तयाऽनीतं श्रीहरेः प्रसादं दत्वा 'खादतु' इत्युक्तवती। तेन प्रसादसेवनेन सन्तुष्टान्तरङ्गः जातः। तदा तं कटाक्षयितुं साक्षात् अलमेलुमङ्गा एवागता इति भावयन् आशुशतकपद्यैः मातुः अर्चनामकरोत् अन्नमाचार्यः।

### तिरुमला दर्शनम् :

अत्युत्साहमन्नमाचार्यः तिरुमलां प्राप्तवान्। आदौ पुष्करिण्यां स्नानमाचरितवान्। पुष्करिण्याः सौन्दर्यं दृष्ट्वा अन्नमाचार्यस्य मनः श्वेतकमलमिव विकसितः। आनन्दसन्दोहेन वराहस्वामिनः दर्शनमकरोत् अन्नमाचार्यः। भूवराहस्वामिनः दर्शनात्परं परमपुरुषस्य दर्शनार्थं गतवान्। आनन्दनिलयस्य दर्शनार्थं प्रधानद्वारं सन्दर्श्य, गरुडस्तम्भाय साष्टाङ्गनमस्कारं कृत्वा वेण्डिवाकिलिं (रजतद्वारं) दृष्ट्वा प्रदक्षणमार्गे आलये प्रदक्षणां कृतवान्। आलये पाकशालायाः आगम्यमानं स्वादमास्वाद्य श्रीहरेः प्रसादान् आस्वादयन् प्रदक्षिणं कुर्वन् योगनारसिंहं, श्रीमद्रामानुजाचार्यान् सन्दर्श्य देदीप्यमानमानन्दनिलयं सन्दर्श्य आनन्दमनुभवत् अन्नमाचार्यः। वाहनमण्डपे (इदानीं परकामणी) स्वामिनः उत्सवार्थं

उपयुज्यमानं उच्चैश्रवं, गरुडवाहनं, शेषवाहनञ्च सन्दर्श्य अर्चितवान्। नित्यकल्याणभूतस्य श्रीवेङ्कटेश्वरस्य कल्याणोत्सवमण्डपं दृष्ट्वा, श्रीहरेः हुण्डीं दृष्ट्वा यत्किञ्चित् तस्य समीपे विद्यमानमर्पितवान्।

**श्रीवेङ्कटेश्वरस्य दर्शनम्** - स्वर्णद्वारतः आलयं प्रविष्य तत्र प्रस्फुटं दृश्यमानं मूर्तिं, द्वाभ्यां हस्ताभ्यां शङ्खचक्रधारिं, नाभ्यां माणिक्यैः अलङ्कृतवतं, नन्दकधारिं, चिरुधण्डाभिरलङ्कृपादपद्मं, कटिवरदहस्तं, मणिमयकर्णाभरणकान्तियुक्तं, मन्दस्मितवदनारविन्दं, धगद्धगायमान रत्नकिरीटधारिं, श्रीवत्साङ्क कौस्तुभधारिं दिव्यमङ्गलाकारं, श्रीनिवासमन्नमाचार्यः नेत्राभ्यां सेवितवान्। तं दिव्यमङ्गलविग्रहं अन्नमाचार्यः सन्दर्श्य स्तुतवान्। स्तुत्वा कीर्तिवान्। दर्शनपारवश्यात् अर्चकैः दत्तान् तीर्थप्रसादान् स्वीकृत्य वासं गतवान्। रात्रौ आनन्दपारवशात् निद्रा नागता नेत्रयोः श्रीवेङ्कटेश्वरस्य पूरितवान्। अनन्तरदिने प्रातः तिरुमलाक्षेत्रे विद्यमानान् कुमारधारा, अमरतीर्थम्, आकाशगङ्गा, पापविनाशतीर्थान् संसेव्य श्रीवेङ्कटेश्वरस्य दर्शनार्थं पुनः गतवान्। ''यथा अन्नमाचार्यः गतवान् तदा मन्दिरस्य द्वारबन्धाः पिहिताः वर्तन्ते। तदान्नमाचार्यः अलमेलुमङ्गपतेरुपरि आशुशतकमेकमुक्तवान्। तेन पिहताः द्वारबन्धाः स्वयमेव उद्घटिताः। तत्र विद्यमानाः अर्चकाः एतत्सर्वं दृष्ट्वा आश्चर्यचकिताः भूत्वा तं अन्नमाचार्यं सगौरवं मन्दिरे स्वीकृत्य गतवन्तः। तत्र सुवर्णाभरणैः अलङ्कृतं भक्तजनानां कल्पवृक्षं श्रीवेङ्कटेश्वरं अन्नमाचार्यः सेवितवान्।

आगमविध्यनुसारं अर्चकेन कृतमर्चनं दृष्ट्वा अन्नमाचार्यः पूर्वोक्तं शतकं पुनरेकवारमुक्तवान्। वेङ्कटेश्वरः तस्य कृपां दर्शितवान्। श्रीवेङ्कटेश्वरस्य कण्ठेऽलङ्कृतः मौक्तिकहारः भगवतः पादयोरुपरि पतति। अर्चकः आश्चर्यमनुभूतवान्। सः बालकः सामान्यः बालकः नास्ति (अन्नमाचार्यः)। श्रीनिवासकृपापात्रः इत्युक्तवान्। तत्र विद्यमानाः सर्वेऽपि एतत्सर्वं दृष्ट्वा अन्नमाचार्यः गौरवपुरस्सरं दृष्टवन्तः। तदारभ्य प्रतिदिनं श्रीवेङ्कटेश्वरस्य दर्शनं कुर्वन्, भगवतः नामसङ्कीर्तनं कुर्वन् तिरुमलायामेव अटन्नासीत् अन्नमाचार्यः।

# लेखकेभ्यः स्वागतम्

सप्तगिरिमासपत्रिकायां प्रकाशनार्थं लेखनानि प्रेषयितुमर्हन्ति। लेखकाः कृपया अधोनिर्दिष्टसूचनाः अवश्यं पालयन्तु। तेन लेखानां परिशीलने, प्रकाशने च आनुकूल्यं भवति।

१. लेखनानि पत्रस्य एकस्मिन्नेव पार्श्वे लिखितं भवेत्। लेखनं मुद्रणे पृष्ठद्वयातिरिक्तं यथा न भवेत् तथा प्रेषयन्तु।

२. देवनागरिलिप्यां टङ्कणं कृत्वा यदि प्रेषयन्ति तर्हि सान्द्रमुद्रिकामपि प्रेषयन्तु। पेज्मेकर् अनु-६ मध्ये टङ्कणं कृत्वा प्रेषयन्ति चेत् उपकृताः भवेम।

3. प्रेष्यमाणं लेखनम् आत्मनः एव इत्यत्र धृवीकरणपत्रमवश्यं भवेत्।

४. लेखकाः स्वसङ्केतेन सह दूरवाणीसङ्ख्यामपि लिखन्तु।

५. रचनानां चयने, प्रकाशने च प्रधानसम्पादकस्यैव अन्तिमनिर्णयः। अस्मिन् विषये पत्रव्यवहारादिकं नानुमन्यते।

६. स्वरचनासम्बद्धचित्राण्यपि प्रेषयितुमर्हन्ति।

७. रचनायाः भाषा कठिना, दीर्घसमासयुक्ता वा मा भवतु।

८. पर्वदिनादिकमुद्दिश्य लिख्यमानं लेखनं मासत्रयपूर्वमेव प्रेषितं भवेत्।

९. लेखनस्य प्रतिस्वीकरणेच्छुकाः पर्याप्तप्रमाणेन पत्रालयचीटिकायुक्तं, मुखभागे सङ्केतेन युक्तं पत्राचारपुटकं संयोज्य प्रेषयन्तु।

१०. मुद्रितलेखनानि भगवदनुग्रहेण, पारितोषकेन च सत्क्रियन्ते।

भवतां लेखनप्रेषणार्थमस्माकं

**सङ्केतः**

प्रधानसम्पादकः
सप्तगिरिमासपत्रिका। ति.ति.दे. प्रेस् कांपौण्ड्
कपिलतीर्थं रोड्, तिरुपति
चित्तूरु - आं. प्र.
पिन् - ५१७ ५०७



# अभिजित् लग्न वैशिष्ट्यम्

- के.श्रावणी रेड्डि, चरवाणी - ९७००२२२९५९

**कालशास्त्रं नमस्कृत्य अभिजिल्लग्नकं तथा।**
**सारल्येनावबोधाय लिख्यते च यथा मतिः।।**

अस्माकं भारतस्य सनातन संपत् भवति वेदराशिः। तस्य वेदस्य अङ्ग षट्कं वर्तते। तस्मिन् ज्यौतिषम् अन्यतमं भवति। तद् ज्यौतिषम् वेद पुरुषस्य नयन स्वरूपं वर्तते। तस्मिन् ज्योतिष्ये भागत्रयं वर्तते। यथा वेदस्य षडङ्गानि वर्तन्ते तथैव ज्योतिषस्य अङ्गषट्कं वर्तते। तस्मिन् मुहूर्तम् इति एकं अङ्गं लोके नितान्त प्रसिद्धम् वर्तते। वयम् यत्किमपि शुभकार्यं कुर्मः तस्य कार्यस्य मुहूर्तविचारः अस्माभिरवश्यं क्रियते। मुहूर्तमेकं निर्माणाय तत्र लग्नस्य प्राधान्यता अधिकम् भ्राजते। लग्नानि मेषादारभ्य मीनं यावत् प्रतिदिनं प्रायशः घण्टाद्वय भेदेन अनुस्यूततया राजन्ते। तेषु द्वादशलग्नेषु इदम् अभिजित् न दृश्यते खलु? इति अस्माकं मनसि काचित् शंका उदेति तस्य विचार एव इदानीं क्रियते। यथा

**''सूर्याचतुर्थं यल्लग्नमभिजित्संज्ञकं यत्तत्।**
**सर्व दोष निहन्त्याशु पिनाके त्रिपुरं यथा।।**

अर्थात् सूर्योदयात् चतुर्थं लग्नं अथवा मुहूर्तम् यद् वर्तते तदेव अभिजिन्मुहूर्तम् इति वदन्ति। एतन्मुहूर्तम् पिनाकपाणिः त्रिपुरासुरं नाशितवान् तथा इदमपि सर्वान् दोषान् अपनोदति। एतन्मुहूर्तम् ''सर्वदेशेष्विदं मुख्यम् सर्व वर्णेषु सर्वदा'' इत्युक्तरीत्या सर्वदेशीयानां समस्त वर्णानां कृते अपि प्रशस्तं भवति। यथा हरि नाम स्मरणेन दोषाः सर्वे निर्गच्छन्ति तथैव एतद् मुहूर्तम् अपि सर्वान् दोषान् नाशयति। तथैव नारद संहितायाम् यात्रा प्रकरणे इत्थं ब्रवीति

**अभिजिक्षण योगोऽयम् चेष्टा फल सिद्धिदाः।**
**पञ्चाङ्ग शुद्ध रहिते दिवसेऽपि फलप्रदः।।**

अर्थात् यात्रा काले अभिजिल्लग्नम् सम्पद्यते चेत् पञ्चाङ्ग शुद्धिर्विना अपि शुभकरं भवति। एवं ''अभिजित् सर्व कार्येषु शस्तं नात्रोपनयनम्'' इत्युक्तरीत्या अभिजित् मुहूर्तम् सर्व कार्येषु प्रशस्तं भवति किन्तु उपनयन कार्यस्य अप्रशस्ते एव भवति। एवं मुहूर्तवल्लर्यां इत्थं ब्रुवन्ति यथा ''अभिजित् सर्व दोषघ्नं'' इति एतद् वचनम् प्रयाण विषये एव वर्तते नत्वन्येषु शुभकार्येषु इति।

**तथैव नारद संहितायां विवाह प्रकरणे :**

''चतुर्थ अभिजिल्लग्नं गोधूलिकं तदुभयं विवाहे पुत्रपौत्रदम्'' इति। अर्थात् अभिजित् गोधूलिकयोः उभयोः लग्नयोः विवाहं क्रीयते चेत् दम्पत्योः पुत्रपौत्राभिवृद्धिः भवतीति वदन्ति। अत्र प्राक् देशीयानाम् कलिंग देशीयानम् कृते गोधूलि समयः प्रशस्तः। अवशिष्ट देशीयानां कृते अभिजिल्लग्नं प्राशस्त्यं भवति। इति ब्रुवन्ति। एवं वास्तुदुन्दुभौ

**उत्पात विष्टि व्यतिपात पूर्वान्निहन्ते दोषानभिजिन्मुहूर्तेः।**
**व्रतश्च भाम्यामपहाय कार्यकर्तुः प्रयातर्दिशति स्वहृदयम्।।**

अर्थात् इदं अभिजिन्मुहूर्तम् उत्पाविष्ठि करण, व्यतीपात योगादीनां दोषान् सर्वान् हरति। ज्योतिर्विदाभरणे विवाहप्रकरणोत्तराधै दशमश्लोके कालिदासः एवं ब्रवीति महात्मानः एवं सुखं नानभूतवन्तः इति कारणात् अभिजित् नक्षत्रम् त्यक्तव्यम्। वाल्मीकि रामायणे युद्धकाण्डे चुतर्थ सर्गतृतीय श्लोके गोविन्दराज व्याख्याने एवं दृश्यते।

**अस्मिन् मुहूर्ते सुग्रीव प्रयाणमभिरोचये।**
**युवतो मुहूर्तो विजयः प्राप्तो मध्यं दिवाकरः।।**
**इति**

अर्थात् सुग्रीवः अपि अस्मिन् मुहूर्ते एव युद्ध करणाय उपक्रमितवान्। किमर्थमिति चेत् अस्य मुहूर्तस्य अपर नाम भवति विजय मुहूर्तम् इति। एवं मुहूर्त मार्ताण्डे अभिजिल्लक्षणफलं एवं प्रतिपादितम्। अभिजिन्मुहूर्ते दक्षिण दिशं विहाय अन्य दिग्भ्यः प्रयाणेन विशेष फलं आप्नुवन्ति इति अस्य वैशिष्ट्यम् प्रतिपादितम्।एतावद् विचारणान्तरं महर्षीणां वचनम् एतद् वर्तते यत् सर्व देशेषु सर्व वर्णेषु सर्व शुभकर्मसु उपनयनं विहाय अन्य शुभकर्मसु एतन्मुहूर्तं विशेष फलं दापयति इत्यत्र नास्ति शङ्का लेशः इति वदन्तः। इदं अभिजितलग्नं ''अशेष दोषापहं'' इति निर्धारितवन्तः। एवं प्रकारेण अभिजित् लग्नं लोके महान् आदरं तथैव प्राधान्यं भजते इति अवगन्तुं पारयामः।





# पुराणेषु श्रीवेङ्कटाचलधीशः

- डा.गङ्गिशेट्टि लक्ष्मीनारायण
चरवाणी - ९४९४२४८३४८

कलौ तु भारते वर्षे मानुषंजन्म दुर्लभम्।
ततो वेङ्कटयात्रा तु दुर्लभा सुकृतं विना।।
इत्युक्त्वा वेङ्कटाधीशो हरिर्गरुडवाहनः।
रमयासहितो रमे वेङ्कटाख्ये महीधरे।।

भारतदेशे जन्म दुर्लभं भवति। जन्मजन्मान्तरपुण्यकार्याचरणमेव वेङ्कटाद्रियाताकारणं भवतीति गरुडवाहावारूढः श्रीहरिः श्रीलक्ष्मीं प्रति अकथयत्।

मायावी परमानन्दं त्यक्त्वा वैकुण्ठमुत्तमम्।
स्वामिपुष्करिणीतीरे रमया सह मोदते।।

कलियुगे भूलोकवैकुण्ठनाम्ना प्रसिद्धः वर्तते वेङ्कटाद्रिः। हरिदासाः पुराणाधारैः भक्तिपारम्येन च वेङ्कटाद्रीशं श्रीनिवासं समर्चितवन्तः। हरिदासाः भगवतः श्रीवेङ्कटेश्वरस्य अनुग्रहं संप्राप्य स्वकीयदिव्यानुभूतिं गम्भीरपदैः स्तुतवन्तः। श्रीवेङ्कटेश्वरः चतुर्युगमूर्तिः वर्तते। अपि च श्रीवेङ्कटेश्वरः कलियुगे कल्याणचक्रवर्ती भवति। ''कलौ वेङ्कटनायकः'' इत्युच्यते एव। देव-गन्धर्व-किन्नर-किंपुरुष-ऋषि-मुनि-मानुषोत्तमैः पूज्यमानः देवशिखामणिः श्रीवेङ्कटेश्वरः। अयं श्रीवेङ्कटेश्वरः देवताधिपमुकुटः हरिदासानाम् आराध्यदेवश्च भवति। यथा पूर्णाहुतिना यज्ञसमाप्तिः भवति तथा यं कमपि देवम् अर्चयामः चेदपि, यस्मिन् कस्मिन् तीर्थे स्नाताः चेदपि, यत् किमपि क्षेत्रं दर्शयामः चेदपि वेङ्कटाद्रिदर्शनेनैव सर्वकर्मधर्मसमर्पणं भवति। अतः एव न केवलं कन्नडहरिदासाः आभारतम् भक्तकवयः, गायकाश्च। श्रीनिवासं संसेव्यैव तेषां तपसः परिपूर्णं अभवदिति उक्तवन्तः। ''यैर्जन्मलब्ध नृषु भारताजिरे मुकुन्द सैवौपायिक स्पृहा हि नः'' - अनेकजन्मसत्कर्मानुष्ठानपुण्यफलमेव भारते जन्मसंप्राप्त्यर्थे हेतुः भवति इति श्रीमद्भागवतं कथयति।

वेदप्रतिपादितः, सकल-ऋषि-देव-सिध्द-साध्यादीनां निवासयोग्यः, सालग्रामात्मकः, प्रकृतिरमणीयसुन्दरसुगन्ध - पुष्पसमूहयुक्तः पुष्पफलयुक्तवृक्षलतागुल्मादियुक्तः वेङ्कटाद्रिः भवति। अपि च अयं वेङ्कटाद्रिः भयङ्करक्रूरसाधुमृगानां खगानां च निवासः भवति। स्वमामि पुष्करिणी, पापनाशनम् आकाशगङ्गा इत्यादि तीर्थैः विराजमानः वर्तते। अस्मिन् वेङ्कटाद्रिपुण्यक्षेत्रे देवताः वृक्षरूपेण, पितृदेवाः खगरूपेण यक्षकिन्नरादयः पाषाणरूपेण निवसन्ति। इदं वेङ्कटाचलपुण्यक्षेत्रं तावत् लक्ष्मीदेवीदिव्यसन्निधानयुक्तम् अभवत्।

''एवं मनोहर श्रीमान् पर्वतपुण्यकाननः'' इत्युक्तम्। अपि च अञ्जनाद्रिः, वृषाद्रिः, शेषाद्रिः, गरुडाद्रिः, तीर्थाद्रिः, श्रीनिवासाद्रिः, चिन्तामणिगिरिः, वृषभाद्रिः, वराहाद्रिः, ज्ञानाद्रिः, कनाकाद्रिः, आनन्दाद्रिः नीलाद्रिः, क्रीडाद्रिः, वैकुण्टाद्रिः, पुष्कराद्रिः इत्यादि नमान्तरैः व्यवह्रियमाणः अयं पुण्यपर्वतः वेङ्कटाद्रिनाम्ना सुप्रसिद्धः वर्तते। अस्मिन् भूमण्डले अनेन वेङ्कटाद्रिणा तुल्यः नास्ति एव। भगवता वेङ्कटेश्वरेण तुल्यः देवः त्रिकालेषु न भवतीति पुराणानि उद्घोषयन्ति।

**श्रीवेङ्कटाद्रे महिमानमुत्तमम्**
**जानन्ति न ब्रह्मशिवेन्द्रपूर्वकाः**
**किमल्पवीर्या मनुजाः श्रुतिस्था**
**जानन्ति विष्णो स्थलमद्भुतं च**

अयं वेङ्कटाद्रिः ब्रह्म-रूद्र-इन्द्रादि देवताभ्याम् अपि दुर्लभः वर्तते। देवाः अपि एनं दिव्यवेङ्कटाद्रिं ज्ञातुं न शक्नुवन्ति। अतः अल्पज्ञाः मानवाः कथं वा ज्ञातुं शक्नुवन्ति।
''अदे वेङ्कटाचलमखिलोन्नतमु
अदिवो ब्रह्मादुलकपुरूपवाममु'' - आन्ध्रपदकवितापितामहः अन्नमाचार्यः स एव अखिलोन्नतः वेङ्कटाचलः, ब्रह्मादि देवताभ्याम् अपूर्वः भवति इत्यकथयत्। महिमान्वितं एनं पर्वतं पद्भ्याम् आरुह्य तत्रस्थं भगवन्तं श्रीनिवासं दर्शयामः चेत् सम्प्राप्यमाणं पुण्यं अवर्णनीयम् अगणितं च।

**न तीर्थं यात्रा न च दानं यज्ञम्**
**व्रतं तपो नार्चनमन्यदैवम्।**
**यत् श्रीनिवासास्य च नामकीर्तनम्**
**तदेव सर्वार्थसुवृष्टिकारणम्।**

तीर्थयात्रा - दान - यज्ञ - व्रत - तप अर्चनानां समाचारणेन यत् पुण्यम् आगमिष्यति तदपेक्षया अधिकं पुण्यं सर्वार्थसुवृष्टिकारण-श्रीनिवासदर्शनेन अपि च भगवतः श्रीनिवासस्य नामसङ्कीर्तनेन प्राप्यते। उपर्युक्तानां दानायज्ञादीनां समाचारणेन यद् पुण्यफलं प्राप्यते तत् नामसङ्कीर्तनेन प्राप्यमाणपुण्यफले षोडशभागतुल्यम् अपि न भवति।

**तपनाम स्मृतेर्भक्ता कला नार्हन्ति षोडशीम्**
**वेङ्कटेशाय पुरुषाय महात्मने**

महानुभावाय महामायिनेऽम्यकर्मणे इति पुराणानि वदन्ति। सकलदेवतात्मके पुण्यप्रदे वेङ्कटाचले भक्त्या क्रियमाणस्य अल्पकार्यस्य अपि महत् फलम् आगमिष्यति।

**पुण्योऽयं वेङ्कटगिरिस्सर्वपुण्यस्थलेष्वपि**
**समस्ततीर्थान्यत्रैव पुण्यानि निवसन्ति हि।**
**भक्तापराधान् सोढ्यैव वेङ्कटेशो दयापरः।**
**रक्षत्येव ततस्सोयं सेव्य श्री वेङ्कटेश्वरः।**
**सुवर्णमन्नतांबूलं सुगन्धशीतलं जलम्**
**अत्र दत्वा नरः कृतान्सर्वान्कामानवाप्नुयात्।**

अयं वेङ्कटाद्रिः सकलतीर्थानाम् आधारभूतः भक्तापराधसहिष्णोः श्रीनिवासस्य निवासश्च भवति। अस्मिन् पवित्रे वेङ्कटाचले सुवर्णम्, अन्नम्, ताम्बूलं, सुगन्धशीतलजलम् दानं क्रियते चेत् नरः सर्वाभीष्टान् प्राप्तुं शक्नोति।

**अद्भुतं चास्य चरितं वर्णितुं केन शक्यते**
**तथापि तारकं सर्वपापाघ्नं पुण्यवर्धनम्।**
**वेदेषु च पुराणेषु वेङ्कटेशकथामृतम्**
**वर्णितं चेतिहासेषु भारताद्यागमेषु च।**
**मनोहरं तु संश्राव्यमिहामुत्रेष्टदायकम्।**
**ज्ञानप्रदं विशेषेण महेश्वर्यस्य कारणम्।**
**वैराग्यभक्तिसत्वादिप्रदेन्द्रियवशप्रदे।**

एनं वेङ्कटाद्रिं, वेङ्कटाचलाधिपतिं, वेङ्कटाचलतीर्थान् वर्णयितुं न शक्यते। अयं वेङ्कटाचलः सकलपापहारकः पुण्यवर्धकश्च भवति। वेदपुराणेतिहासभारतादिषु मनोहरतया वर्णितम् इदं क्षेत्रं मानवानां सकलेष्टप्रदायकं वर्तते। एवमेव अयं वेङ्कटाचलः ज्ञानः - ऐश्वर्यं भक्तिवैराग्य - सत्वगुणप्रदायकः वर्तते। एकादशपुराणान्तर्गतवर्णितं वेङ्कटाचलमाहात्म्यं वर्णयितुम् असाध्यम् एव योग्यतानुगुणं अस्य वेङ्कटाचलस्य वेङ्कटाचलाधीशस्य च वैशिष्ट्यं ज्ञात्वा सन्दर्शनं श्रेयोदायकं चतुर्विधपुरुषार्थदायकं च भविष्यति।

**''मानुषं देहमासाद्य यः पुमान् वेङ्कटाचलम्''**
**''वैकुण्ठो वेङ्कटगिरिः वासुदेवो रमापतिः**
**न कृतं देवसंघैश्च न कृतं विश्वकर्मणा**
**तत्र साक्षात् रमाकान्तः किं तत्र सुकृतं फलम्''**

भूलोकवैकुण्ठः एव अयं वेङ्कटाद्रिः। अपरः वासुदेवः एव श्रीवेङ्कटेश्वरः। अयं श्रीवेङ्कटेश्वरः स्वयंभूः वर्तते। देवतासमूहेन वा विश्वकर्मणा वा न निर्मितः। जन्मान्तरपुण्यफलेनैव रमानाथस्य वेङ्कटाचलाधिपस्य श्रीवेङ्कटेश्वरस्य सकलश्रेष्ठप्रदायकं दर्शनं भवति।







# पळनी तीर्थस्थलस्य पुराणम्

- राधाकृष्ण शर्मा

दक्षिणभारते भिन्नेषु राज्येषु स्कन्दालयाः निर्मिताः सन्ति। तमिलनाडु-राज्येऽपि अनेके पुरातना आलयाः सन्ति यान् जनाः भक्त्या गच्छन्ति। मुख्यतया षड् कौमारतीर्थस्थलानि वर्तन्ते यानि तमिलभाषया ''अरुपडैवीडु'' (षड् आयतनानि) नाम्ना आख्यातनि। एतेषु स्थलेष्वपि षडालयाः स्कन्दस्य सन्ति एषां स्थलपुराणानि विशिष्टानि इति जना भावयन्ति। एतेषु अन्यतमं स्थलं पलनी नाम्ना प्रसिद्धमस्ति। अस्य स्थलस्य पुराणं किम्? अत्र किमर्थं स्कन्दः उषितवान्? तत्पूर्वं कस्यचित् फलस्य विषये विनायकस्कन्दयोर्मध्ये स्पर्धा किमर्थम् आसीत्? अस्य स्थलस्य नाम पलनी इति कथं जातम्? पुराणकथाप्रसङ्गमिमम् अधिकतया दक्षिणभारतीया (विशिष्य तमिलजना) एव मन्येरन्। तमन्येऽपि जानीयुरिति आशया उपरितनानां प्रश्नानां समाधानरूपेण च प्रस्तुतीयम्।

फलप्राप्तिप्रसङ्गोऽयं सुप्रसिद्धश्च पौर्विकः।
द्राविडैस्तु परिज्ञातो विज्ञेयोऽथ परैरपि॥१॥
नारदो ब्रह्मजः पूर्वं प्राप्तकैलासपर्वतः।
पार्वतीशावुपागम्य फलहस्तो नमोऽकरोत्॥२॥

**नारद उवाच**

नैवेद्यमेतदानीतं प्रज्ञानदायकं फलम्।
अविभज्यैव भोक्तव्यं यस्यैतद्धि विशेषणम्॥३॥

**ईश्वर उवाच**

विघ्नेशेन कुमारेण द्वाभ्यामपि च काङ्क्षितम्।
समस्येयं विचित्राहो कस्मै देयमिदं फलम्॥४॥

**नारद उवाच**

त्रिवारं कोऽपि यो विश्वं कृत्वादिमं प्रदक्षिणम्।
प्राप्नोति फलमेतद्धि तस्यैव पारितोषिकम्॥५॥
एतच्छ्रुत्वा समारुह्य स्कन्दोऽडीयत बर्हिणम्।
गणेशः स्थूलकायस्तु तत्रैवासीत् सचिन्तनम्॥६॥
क्षणं प्रणम्य हेरम्बः पितरावादरेण हि।
स्व्यकरोत्तत्तत्फफळं धीदं त्रिवारं परिगम्य च॥७॥
प्रत्यागत्य कुमारो वै खिन्नो भूत्वा सरोदनम्।
पप्रच्छ पितरौ कुप्यन् कुतो भ्रात्रा फलं जितम्॥८॥

**गणेश उवाच**

उक्तिर्मे शृणु हे भ्रातः पितरावेव मे जगत्।
तौ हि प्रदक्षिणं कृत्वा अलभेऽहमिदं फलम्॥९॥
छलो मत्वेति सर्वेषां त्यक्तकैलासपर्वतः।
दण्डपाणिः कुमारो वै शिवशैलमवाप्तवान्॥१०॥
कुपितं तं समाश्वास्य शोच मेति शिवोऽवदत्।
साक्षात्त्वं हि फलं सार्थं सर्वज्ञानप्रदायकम्॥११॥

तमिलजनाः मन्यन्ते यत् कुपितं स्कन्दं सान्त्वनार्थं शिवः तमिलभाषया ''पलं नी अप्पा'' (त्वमेव फलम्) इत्युक्तवान्। तस्मात् अस्य तीर्थस्थलस्य नाम पलनी जातमिति मान्यता वर्तते। स्थलेऽस्मिन् गिरिद्वयमस्ति शिवगिरिः शक्तिगिरिश्चेति। पुरा अगस्त्यमुनिना तस्य शिष्य इडुम्बः आदिष्टः यत् इदं गिरिद्वयं भारतखण्डस्य उत्तरभागात् स्वीकृत्य दक्षिणे स्थापनीयमिति। गुरुवचनानुगुणं इडुम्बः तत् गिरिद्वयं तस्य स्कन्धयोः आरोप्य कार्यमिदं साधयन् चलनम् आरब्धवान्। एकदा मध्ये श्रान्तः सन् कस्यचित् स्थाने तत् गिरिद्वयं तस्य स्कन्धाभ्याम् अवारोपितवान्। तत् स्थानमेव इदानींतन पलनीनगरम् वर्तते। शिवगिरावेव स्कन्दो दण्दधरः सन् वासं अकरोत्। तत्रैव तस्य मन्दिरमपि निर्मितमस्ति। मन्दिरस्य मूलमूर्तिः नवपाषाणखण्डेन भोगसिद्धपुरुषेण निर्मिता इति मन्यते। अत्रत्य स्कन्दः अभिषेकप्रिय इति कारणेन अस्याः मूर्तेः भस्मेन पञ्चामृतेन च अभिषेकः क्रियते। भक्ता इदं पदार्थद्वयं प्रासादरूपेण स्वीकुर्वन्ति।

प्रभूत स्त्रिककुद्धाम पवित्रं मङ्गळं परम्।

Edited and Published on behalf of T.T.Devasthanams by Prof. K.Rajagopalan, Ph.D., Chief Editor, T.T.D., and Printed at T.T.D.Press by Sri. P.Ramaraju, M.A., Special Officer., (Press & Publication), T.T.D. Press, Tirupati - 517 507.



इटु गरुडनि नी वेक्किननु
पटपट दिक्कुलु बग्गन बगिले
एगसिन गरुडनि एपुन 'धा' यनि
जिगिदोलक चबुकु चेसिननु
निगमांतंबुलु निगमसंघमुलु
गगनमु जगमुलु गडगड वडके
बिरुसुग गरुडनि पेरेमु दोलुचु
वेरसि नीवु गोपिंचिननु
सरस नखिलमुलु जर्जरितमुलै
तिरुपुन नलुगड दिरदिर दिरिगे
पल्लिंचिन नी पसिडि गरुडनिनि
केल्लुन नी वेक्किनयपुडु
झल्लने राक्षस समिति नी महिम
वेल्लि मुनुगुदुरु वेङ्कटरमणा

अन्नमय्य
संपुटम् १ संकीर्तन ९२

गरुडपञ्चमी
२५-०७-२०२०



SAPTHAGIRI (KANNADA) ILLUSTRATED MONTHLY
Published by Tirumala Tirupati Devasthanams
printing on 30-07-2020.

# तिरुमलक्षेत्रे श्रीस्वामिनः पवित्रोत्सवः

३०-०७-२०२० तः ०१-०८-२०२० पर्यन्तम्